(१) अत्राहुः केचित्—प्रत्यक्षपरोक्षज्ञानयोर्वैलक्षण्यमनुभवसिद्धम्। तच्च प्रत्यक्षस्थले वृत्तिनिर्गमाभ्युपगमे एव सम्भवति। बहिर्निर्गतवृत्त्यवच्छिन्नचैतन्यं अपरोक्षज्ञानम्, अनिर्गतवृत्त्यवच्छिन्नचैतन्यं परोक्षज्ञानमिति च। तत्र प्रत्यक्षस्थले विषयावच्छिन्नचैतन्यमेव विषयप्रकाशकः, न जीवचैतन्यम्। तस्यानुपादानत्वेन साक्षात्तादात्म्यसम्बन्धाभावेऽन्यस्य स्वरूपसम्बन्धादेः कल्पनायोगात्। तादृशविषयाधिष्ठानब्रह्मचैतन्यस्यावृतत्वात् आवरणाभिभवरूपाभिव्यक्तिसिद्ध्यर्थं वृत्तिनिर्गमाभ्युपगम आवश्यकः। परोक्षस्थले तु वृत्तिनिर्गमनहेतुसन्निकर्षाभावादगत्याऽनिर्गतवृत्त्यवच्छिन्नचैतन्यमेव स्वरूपसम्बन्धेन विषयविषयकमिति ॥

(२) अपरे तु—अहङ्कारादिष्वापरोक्ष्यस्य साक्षाच्चैतन्यसंसर्गप्रयुक्तत्वेन घटादावपि स्वसंसृष्टमेव चैतन्यमापरोक्ष्यहेतुरिति तदभिव्यक्तये वृत्तिनिर्गमोऽभ्युपेय इति ॥

(३) अन्ये तु—शब्दानुमानावगतपरोक्षज्ञानग्राह्यापेक्षया प्रत्यक्षग्राह्यगन्धादावभिव्यक्ता परोक्षैकरसचैतन्यतादात्म्यात् स्पष्टता विषयताविशेषरूपाऽस्ति। तत्सिद्धये वृत्तिनिर्गम इति मन्यन्ते ॥

॥ (२४) ॥

ननु ज्ञानाज्ञानयोर्विरोधे समानविषयकत्वमात्रं प्रयोजकमङ्गीकृत्य विषयचैतन्यगतस्य अज्ञानस्य अविनिर्गतवृत्त्यैव निवृत्तिसिद्धेस्तन्निर्गमो व्यर्थ इति चेत्—

(१) अत्राहुः केचित्—वृत्तिनिर्गमानभ्युपगमे ज्ञानाज्ञानयोर्विरोधप्रयोजकस्य समानाश्रयत्वे सति समानविषयकत्वस्य दुर्निरूपत्वेन विरोधो न स्यादिति तन्निर्वाहाय निवर्तकज्ञानस्य अज्ञानाश्रयचैतन्यसंसर्गनियतत्वरूपविशेषणसिद्धये वृत्तिनिर्गमोऽभ्युपेय इति ॥

(२) अन्ये तु—विषयगताज्ञानस्य अन्वयव्यतिरेकाभ्यां ज्ञाननिवर्त्यत्वदशायां लाघवात् समानाधिकरणज्ञाननिवर्त्यत्वं गृह्यत इति तत्सिद्ध्यर्थं वृत्तिनिर्गमः फलतीत्याहुः ॥

(३) अपरे तु—समानाधिकरणयोरेव तमःप्रकाशयोर्निवर्त्यनिवर्तकभावस्य दृष्टत्वेन दृष्टानुरोधाज्ज्ञानाज्ञानयोरपि समानाधिकरणयोरेव निवर्त्यनिवर्तकभावः कल्प्यत इति तदर्थं वृत्तिनिर्गम इत्याहुः ॥

(४) इतरे तु—आवरणाभिभवार्थं वृत्तिनिर्गमानभ्युपगमेपि, चिदुपरागार्थं वा प्रमातुर्विषयावभासकब्रह्मचैतन्येन अभेदाभिव्यक्त्यर्थं वा वृत्तिनिर्गम इत्याहुः ॥

॥ ( २५ ) ॥

ननु किमस्ति जीवब्रह्माभेदे प्रमाणमिति चेत्—

(१) अत्राहुः केचित्—जीवब्रह्मैक्यसिद्धौ सर्वे वेदान्ताः प्रमाणम्, "तत्त्वमसि" "अहम्ब्रह्मास्मि" "अयमात्मा ब्रह्म" इत्यादिश्रुतिभ्यः। एवं च प्रत्यगभिन्नेऽद्वये ब्रह्मणि सर्वेषां वेदान्तानां उपक्रमादिषड्विधतात्पर्यग्राहकलिङ्गैः समन्वयः सिद्ध इति ॥

इति श्रीवासुदेवब्रह्मेन्द्रसरस्वतीविरचिते सिद्धांतलेशतात्पर्यसङ्ग्रहे प्रथमपरिच्छेदः सम्पूर्णः ॥

॥ ॐ ॥

## अथ द्वितीयपरिच्छेदः ॥

॥ (१) ॥

ननु प्रत्यगभिन्नेऽद्वये ब्रह्मणि वेदान्तानां समन्वयो न सिद्ध्यति, घटपटादिद्वितीयप्रपञ्चसत्ताग्राहिप्रत्यक्षादिप्रमाणविरोधात् इति चेत्—न॥

(१) अत्राहुः तत्वशुद्धिकाराः—प्रत्यक्षादिप्रमाणं न घटादि तन्निष्ठपारमार्थिकत्वं वा गृह्णाति । किन्तु घटाद्यनुविद्धं तदधिष्ठानं निर्विशेषचिन्मात्रम्, इदमंशवत् । सर्वस्माद्भिन्नत्वेन प्रतीयमानं भेदप्रतियोगि घटादिकं तु साक्षिरूपभ्रान्त्या प्रतिभासते, आरोपितरजतांश इव, इति ॥

(२) न्यायसुधाकृतस्तु—घटादेरिन्द्रियग्राह्यत्वेपि मिथ्यात्वबोधकश्रुतीनां न प्रत्यक्षविरोधः, सन् घट इत्यादिप्रत्यक्षेण घटादौ प्रतीयमानस्य सत्त्वस्य अधिष्ठानभूतब्रह्मगतत्वेन स्वीकारादित्याहुः ॥

(३) संक्षेपशारीरकाचार्यास्तु—प्रत्यक्षस्य पराग्विषयघटादौ पृथग्व्यावहारिकसत्त्वग्राहित्वेपि तस्य प्रमाणाभासत्वात् न तेन तत्त्वावेदकप्रमाणश्रुतिबाध इति ॥

(४) केचित्तु—घटादिसत्त्वग्राहिप्रत्यक्षस्य प्रामाण्येपि, तद्ग्राह्यघटादिसत्त्वस्य सत्ताजातिरूपत्वेन वा तत्तद्देशकालसम्बन्धरूपत्वेन वा घटादिस्वरूपत्त्वेन वा मित्थ्यात्वाविरोधित्वात्, तद्बोधकश्रुतीनां न प्रत्यक्षविरोधः इत्याहुः ॥

( ५ ) अपरे तु—अबाध्यत्वरूपसत्त्वस्य प्रत्यक्षग्राह्यत्वेपि न मिथ्यात्वश्रुतिविरोधः । कालत्रयाबाध्यत्वरूपसत्त्वमेव मिथ्यात्वविरोधि; तच्च ब्रह्मण एव । प्रपञ्चस्य तु यावद्ब्रह्मज्ञानमबाध्यत्वरूपं सत्त्वम्, तच्च न मिथ्यात्वविरोधीति, न मिथ्यात्वश्रुतेः प्रत्यक्षविरोध इत्याहुः ॥

( ६ ) अन्ये तु—कालत्रयाबाध्यत्वरूपसत्त्वग्राहित्वेन प्रत्यक्षस्य श्रुतिविरोधित्वेपि न मिथ्यात्वसिद्ध्यनुपपत्तिः । श्रुत्या अपच्छेदन्यायेन परत्वोपेतया निर्दोषया, दोषशङ्काकलङ्कितस्य प्रथमप्रवृत्तस्य प्रत्यक्षस्य बाधोपपत्तेः । न चैवं प्रत्यक्षस्योपजीव्यत्वादुपजीव्यविरोध इति वाच्यम् । श्रुत्या तावत् वर्णपदवाक्यात्मकप्रत्यक्षांशमुपजीव्य अनुपजीव्यतत्सत्यत्वांशस्य केवलमुपमर्दनात् इत्याहुः ॥

॥ ( २ ) ॥

ननु आगमस्य प्रत्यक्षात्प्राबल्ये तर्हि किमर्थं प्रत्यक्षाविरोधाय "यजमानः प्रस्तरः" "सोमेन यजेत" इत्यादौ श्रौतस्य प्रस्तरशब्दस्य सोमशब्दस्य च गौणी वृतिरङ्गीकृतेति चेत्—

( १ ) अत्राहुर्भामतीकाराः—तात्पर्यवती श्रुतिः प्रत्यक्षाद्बलवती न तु श्रुतिमात्रम् । अद्वैतश्रुतिस्तु उपक्रमादिषड्विधलिङ्गावगमिततात्पर्या प्रत्यक्षाद्बलवतीत्यतः प्रत्यक्षस्यैव बाधइति ॥

( २ ) विवरणानुयायिनस्तु—न तात्पर्यवत्त्वेन श्रुतेः सतः प्राबल्यं, किन्तु निर्दोषत्वात् परत्वाच्च श्रुतिमात्रस्य प्रत्यक्षात्प्राबल्यमित्युत्स-

---

१ प्रत्यक्षात् ।

र्गः । यत्र श्रुतिबाधितं प्रत्यक्षं निरवकाशम् तत्र प्रत्यक्षेण श्रुतिरेव बाध्यते । तथा च प्रत्यक्षमपि अर्थक्रियासमर्थव्यावहारिकविषये चरितार्थमित्याहुः ॥

ननु—[1]अपच्छेदन्यायेन प्रत्यक्षाच्छ्रुतेरिव, वेदोपक्रमन्यायेन प्रत्यक्षस्यैव श्रुतेः प्राबल्यं कुतो न स्यात् विनिगमनाविरहादिति चेत्—

अत्राहुः केचित्—[2]उपक्रमन्यायप्रवृत्तिस्तु तत्रैव यत्र परस्य पूर्वापेक्षेति एकवाक्यता प्रतीयते । प्रत्यक्षागमयोस्तु एकवाक्यताभावात्प्रत्यक्षमविगणय्य अद्वैतागमस्यैवापच्छेदन्यायेन स्वार्थबोधकत्वं इत्यस्त्येव [3]विनिगमना । अतएव लोकेपि प्रथमप्रवृत्तं शुक्तिरूप्यप्रत्यक्षमाप्तोपदेशेन बाध्यत इति ॥

॥ ( ३ ) ॥

ननु आगमापेक्षया उपजीव्यत्वेन प्रत्यक्षस्यैव प्राबल्यम् । अपच्छेदशास्त्रयोर्हि न पूर्वं परस्योपजीव्यमिति युक्तः पूर्वस्य परेण बाधस्तत्र । इह तु उपजीव्यत्वात्पूर्वस्य वर्णपदादिस्वरूपविषयकप्रत्यक्षस्य न परेण "नेह नाना" इत्यागमेन बाध इति चेत्—

( १ ) अत्राहुः केचित्—भ्रमप्रमासाधारणमेव प्रत्यक्षमुपजीव्यम्.

१. पूर्वमीमांसायां अ. ६. पा० ५. सू० ५४ ज्योतिष्टोमे उद्गात्राद्यपच्छेदे प्रायश्चित्तविचारे, उत्पद्यमानमुत्तरज्ञानं स्वविरुद्धस्य पूर्वज्ञानस्य बाधेनैवोत्पद्यते, इत्यधिकृत्य निर्णीतम् ॥

२. उपक्रमोपसंहार इत्यादिषड्लिंगेषु क्रमेण पूर्वपूर्वस्य प्रबलत्वम् ॥

३. अन्यतरपक्षपातिनी युक्तिः ॥

न तद्वर्णपदादिस्वरूपम् । अतः श्रुत्या स्वरूपोपमर्देऽपि नोपजीव्यविरोध इति ॥

( २ ) अन्ये तु—निर्विषयवाक्याच्छाब्दबोधानुदयेन वर्णपदादिस्वरूपयोग्यतासिद्ध्यपेक्षायामपि नोपजीव्यविरोधः । मुक्तिपर्यन्तस्थाय्यर्थक्रियाकार्यसद्विलक्षणव्यावहारिकप्रपञ्चस्वरूपस्य स्वाधिकरणे संयोगतदत्यन्ताभाववदभ्युपगमादिति ॥

( ३ ) अपरे तु—"नेह नानेति" श्रुत्या सत्यत्वेनैव प्रपञ्चनिषेधात् स्वरूपेण च तस्या निषेधान्नोपजीव्यवर्णपदयोग्यतादिविरोध इत्याहुः ॥

( ४ ) अन्ये तु—ब्रह्मणि पारमार्थिकं सत्यत्वं, प्रपञ्चे व्यावहारिकं, शुक्तिरजतादौ प्रातिभासिकं,इति सत्तात्रैविध्यानङ्गीकाराद्ब्रह्मात्मकाधिष्ठानगतमेकमेव पारमार्थिकं सत्त्वं; तदनुवेधादेव घटादौ सर्वत्र सत्प्रतीत्युपपत्तेर्नोपजीव्यवर्णपदादिप्रत्यक्षविरोध इत्याहुः ॥

ननु—ब्रह्मगतपारमार्थिकसत्त्वस्यैव प्रपञ्चेऽपि भानमभ्युपेत्य तद्व्यतिरिक्तसत्त्वाभासाकल्पने व्यवहितसत्यरजतातिरेकेण शुक्तौ रजताभासोत्पत्तिः किमर्थमभ्युपेयते गौरवादिति चेत्—

अत्राहुः केचित्—असन्निकृष्टस्यापरोक्ष्यासम्भवात् तन्निर्वाहार्थं गौरवमपि प्रामाणिकत्वान्न दोषाय इति तदभ्युपगम इति ॥

॥ ( ४ ) ॥

ननु आपरोक्ष्याय रजताभासोत्पत्त्यभ्युपगमे प्रतिबिम्बभ्रमस्थलेऽपि ग्रीवास्थमुखातिरेकेण मुखाभासोत्पत्तिरुपेया स्यात्, इष्टापत्तौ ब्रह्मप्रतिबि-

र्गः । यत्र श्रुतिबाधितं प्रत्यक्षं निरवकाशम् तत्र प्रत्यक्षेण श्रुतिरेव बाध्यते । तथा च प्रत्यक्षमपि अर्थक्रियासमर्थव्यावहारिकविषये चरितार्थमित्याहुः ॥

ननु—[1]अपच्छेदन्यायेन प्रत्यक्षाच्छ्रुतेरिव, वेदोपक्रमन्यायेन प्रत्यक्षस्यैव श्रुतेः प्राबल्यं कुतो न स्यात् विनिगमनाविरहादिति चेत्—

अत्राहुः केचित्—[2]उपक्रमन्यायप्रवृत्तिस्तु तत्रैव यत्र परस्य पूर्वापेक्षेति एकवाक्यता प्रतीयते । प्रत्यक्षागमयोस्तु एकवाक्यताभावात्प्रत्यक्षमविगणय्य अद्वैतागमस्यैवापच्छेदन्यायेन स्वार्थबोधकत्वं इत्यस्त्येव [3]विनिगमना । अतएव लोकेपि प्रथमप्रवृत्तं शुक्तिरूप्यप्रत्यक्षमाप्तोपदेशेन बाध्यत इति ॥

॥ ( ३ ) ॥

ननु आगमापेक्षया उपजीव्यत्वेन प्रत्यक्षस्यैव प्राबल्यम् । अपच्छेदशास्त्रयोर्हि न पूर्वं परस्योपजीव्यमिति युक्तः पूर्वस्य परेण बाधस्तत्र । इह तु उपजीव्यत्वात्पूर्वस्य वर्णपदादिस्वरूपविषयकप्रत्यक्षस्य न परेण "नेह नाना" इत्यागमेन बाध इति चेत्—

( १ ) अत्राहुः केचित्—भ्रमप्रमासाधारणमेव प्रत्यक्षमुपजीव्यम्,

---

१. पूर्वमीमांसायां अ. ६. पा० ५. सू० ५४ ज्योतिष्टोमे उद्गात्राद्यपच्छेदे प्रायश्चित्तविचारे, उत्पद्यमानमुत्तरज्ञानं स्वविरुद्धस्य पूर्वज्ञानस्य बाधेनैवोत्पद्यते, इत्यधिकृत्य निर्णीतम् ॥

२. उपक्रमोपसंहार इत्यादिषड्लिंगेषु क्रमेण पूर्वपूर्वस्य प्रबलत्वम् ॥

३. अन्यतरपक्षपातिनी युक्तिः ॥

न तद्वर्णपदादिस्वरूपम् । अतः श्रुत्या स्वरूपोपमर्देऽपि नोपजीव्यविरोध इति ॥

( २ ) अन्ये तु—निर्विषयवाक्याच्छाब्दबोधानुदयेन वर्णपदादिस्वरूपयोग्यतासिद्ध्यपेक्षायामपि नोपजीव्यविरोधः । मुक्तिपर्यन्तस्थाय्यर्थक्रियाकार्यसद्विलक्षणव्यावहारिकप्रपञ्चस्वरूपस्य स्वाधिकरणे संयोगतदत्यन्ताभाववदभ्युपगमादिति ॥

( ३ ) अपरे तु—"नेह नानेति" श्रुत्या सत्यत्वेनैव प्रपञ्चनिषेधात् स्वरूपेण च तस्या निषेधान्नोपजीव्यवर्णपदयोग्यतादिविरोध इत्याहुः ॥

( ४ ) अन्ये तु—ब्रह्मणि पारमार्थिकं सत्यत्वं, प्रपञ्चे व्यावहारिकं, शुक्तिरजतादौ प्रातिभासिकं,इति सत्तात्रैविध्यानङ्गीकाराद्ब्रह्मात्मकाधिष्ठानगतमेकमेव पारमार्थिकं सत्त्वं; तदनुवेधादेव घटादौ सर्वत्र सत्प्रतीत्युपपत्तेर्नोपजीव्यवर्णपदादिप्रत्यक्षविरोध इत्याहुः ॥

ननु—ब्रह्मगतपारमार्थिकसत्त्वस्यैव प्रपञ्चेऽपि भानमभ्युपेत्य तद्व्यतिरिक्तसत्त्वाभासाकल्पने व्यवहितसत्यरजतातिरेकेण शुक्तौ रजताभासोत्पत्तिः किमर्थमभ्युपेयते गौरवादिति चेत्—

अत्राहुः केचित्—असन्निकृष्टस्यापरोक्ष्यासम्भवात् तन्निर्वाहार्थं गौरवमपि प्रामाणिकत्वान्न दोषाय इति तदभ्युपगम इति ॥

॥ ( ४ ) ॥

ननु आपरोक्ष्याय रजताभासोत्पत्त्यभ्युपगमे प्रतिबिम्बभ्रमस्थलेऽपि ग्रीवास्थमुखातिरेकेण मुखाभासोत्पत्तिरुपेया स्यात्, इष्टापत्तौ ब्रह्मप्रतिबि-

म्बजीवस्यापि ततो भेदेन मिथ्यात्वापत्त्या मुक्तिभाक्तानुपपत्तिरिति चेत्—

(१) अत्राहुर्विवरणानुयायिनः—ग्रीवास्थमुखे दर्पणोपाधिसन्निधानवशाद्दर्पणस्थत्वादिधर्माध्याससम्भवेन न दर्पणे मुखाध्यासः कल्पनीयः। ग्रीवास्थमुखस्यापरोक्ष्यं तु उपाधिप्रतिहतनयनरश्मीनां परावृत्त्य बिम्बग्राहित्वनियमाभ्युपगमात्। वार्तिके चोक्तम्—

"दर्पणाभिहता दृष्टिः परावृत्य स्वमाननम्।
व्याप्नुवन्त्याभिमुख्येन व्यत्यस्तं दर्शयेन्मुखम्"[१] इति ॥

(२) अद्वैतविद्याकृतस्त्वाहुः—बिम्बमुखाद्भेदेन तत्सदृशत्वेन चान्यैः पार्श्वस्थैः स्पष्टं दर्पणे निरीक्ष्यमाणं तत्प्रतिबिम्बं ततो भिन्नं स्वरूपतो मिथ्यैव स्वकरगतादिव रजतात् शुक्तिरजतम्। किञ्च, 'नेदं रजतं मिथ्यैव रजतमभात्' इति सर्वसम्प्रतिपन्नबाधात्, न यथा शुक्तिरजतं सत्यम्; एवं 'दर्पणे मुखं नास्ति, मिथ्यैवात्र दर्पणे मुखमभात्' इत्यादि सर्वसिद्धबाधात्प्रतिबिम्बमसत्यमेव। अत्र तु प्रतिबिम्बजीवस्य स्वरूपतो मिथ्यात्वेपि अधिष्ठानात्मना सत्यतया मुक्तिभाक्तोपपत्तिरिति ॥ अयमेव पक्षः प्रतिबिम्बस्य मिथ्यात्वमभ्युपगच्छतां त्रिविधजीववादिनां विद्यारण्यप्रभृतीनामभिमत इति ॥

ननु—प्रतिबिम्बस्य मिथ्यात्ववादे हि शुक्तिरजतादेरिव तस्यापि अन्वयव्यतिरेकशालि अज्ञानमुपादानम्, तन्निवर्तकं ज्ञानं च वाच्यम्। त-

---

१. बृहदारण्यकवार्तिके अ. १. ब्रा. ४. श्लो. ६१८। तन्मुद्रितपुस्तके—"व्याप्नुवन्त्यविभागेन भ्रान्तिं नो जनयेद्यथा" इत्युत्तरार्धपाठः।

च्चोभयं न सम्भवति। दर्पणादिरूपाधिष्ठानसाक्षात्कारेणाज्ञानस्य निवृत्तत्वानिवृत्तत्वाभ्यामनिरूपणादिति चेत्—

अत्राहुः केचित्—शुक्तिरजताद्यध्यासवत् न प्रतिबिम्बाध्यासे केवलाधिष्ठानावारकमज्ञानमुपादानम्, न वाऽधिष्ठानविशेषांशज्ञानं निवर्तकम्। किन्तु आवरणशक्तिमदज्ञानस्य अधिष्ठानज्ञानेन निवृत्तावपि विक्षेपशक्तिमदज्ञानस्य अनिवृत्तत्वात्तदेवोपादानम्। बिम्बोपाध्योः सन्निधिनिवृत्तिसहितं दर्पणे मम मुखं नास्तीति ज्ञानमेव प्रतिबिम्बाध्यासस्य निवर्तकमिति॥

अन्ये तु—दर्पणाद्युपादानभूतं मूलाज्ञानमेव प्रतिबिम्बाध्यासस्याप्युपादानम्। बिम्बोपाधिसन्निधिनिवृत्तिसहकृतमधिष्ठानज्ञानं तस्य निवर्तकम्। मूलाज्ञानकार्यत्वेपि प्रतिबिम्बाध्यासस्य अविद्यातिरिक्तबिम्बसन्निधानरूपदोषजन्यत्वात् प्रातीतिकत्वमपीति॥

॥ (५) ॥

ननु स्वप्नाध्यासस्य किमुपादानमिति चेत्—

(१) अत्राहुः केचित्—"सुषुप्त्याख्यं तमोऽज्ञानं यद्बीजं स्वप्नबोधयोः" इति स्वप्नजाग्रत्प्रपञ्चयोरेकाज्ञानकार्यत्वप्रतिपादकप्राचीनवचनानुरोधात् प्रतिबिम्बाध्यासवत् स्वप्नाध्यासस्यापि मूलाज्ञानकार्यतया ब्रह्मज्ञानैकबाध्यत्वमेष्टव्यम्। अविद्यातिरिक्तनिद्रादिदोषजन्यतयैव प्रातिभासिकत्वं चेति॥

(२) "बाध्यन्ते चैते रथादयः स्वप्नदृष्टाः प्रबोधे" इति भाष्योक्तेः[2] स्वप्नाध्यासस्य मूलाज्ञानकार्यत्वेपि ब्रह्मज्ञानेतरजाग्रद्बोधबाध्यत्वात्

१. उपादानं. कारणं २. ब्र. सू. ३।२।३ स्य भाष्ये।

प्रातिभासिकत्वं, रज्जुसर्पाध्यासस्येव स्वानन्तरोत्पन्नदण्डभ्रमबाध्यस्य—इत्यन्ये ॥

( ३ ) इतरे तु—जाग्रत्प्रपञ्चं तद्द्रष्टारं चावृत्य जायमानो निद्रारूपो मूलाज्ञानावस्थाभेदः स्वप्नाध्यासस्योपादानम्, स्वप्नप्रपञ्चस्य तद्द्रष्टुः प्रातिभासिकजीवस्य चाधिष्ठानभूतव्यावहारिकजीवयाथात्म्यज्ञानेन निवृत्तिः । न च स्वप्नद्रष्टुः प्रातिभासिकजीवस्यापि बाधे स्वाप्नपदार्थानुसन्धानं न स्यादिति शङ्क्यम्, प्रातिभासिकजीवस्य व्यावहारिकजीवेऽध्यस्ततया तादात्म्यसत्त्वात् व्यावहारिकजीवस्य प्रातिभासिकानुभवेन तदनुसन्धातृत्वोपपत्तेरिति ॥

॥ ( ६ ) ॥

ननु अनवच्छिन्नचैतन्यस्य स्वप्नप्रपञ्चाधिष्ठानत्वपक्षे स्वाप्नगजादेर्बाह्यदेशस्थत्वं वक्तव्यम् । तथा च तस्य विच्छिन्नदेशत्वेन न साक्षिभास्यत्वम्, इन्द्रियाणामुपरतत्वेन च प्रकाशायोगः ॥ अहङ्कारोपहितचैतन्याधिष्ठानत्वपक्षे तु अहं गजो गजवानिति वा धीप्रसङ्ग इति चेत्—

( १ ) अत्राहुः केचित्—प्रथमपक्षेऽहङ्कारानवच्छिन्नमान्तरमीश्वरचैतन्यं बिम्बात्मकं स्वप्नप्रपञ्चस्याधिष्ठानमभ्युपेत्य तस्य च देहान्तरिन्द्रियानपेक्षं स्वतन्त्रान्तःकरणवृत्त्यभिव्यक्तस्यावभासकत्वमिति ॥

( २ ) अन्ये तु—अविद्यायां प्रतिबिम्बभूतं जीवचैतन्यं स्वतोऽपरोक्षमहङ्कारानवच्छिन्नं स्वप्नप्रपञ्चस्याधिष्ठानम् । एवञ्च स्वप्नगजादाविदं पश्यामीत्यादिव्यवहारस्तु प्रमातुर[1]हङ्कारानवच्छिन्नाधिष्ठानचैतन्यगोचरान्तःकरणादिवृत्तिकृताभेदाभिव्यक्त्येति ॥

---

१. तथा च स्वाप्नगजाद्यधिष्ठानचैतन्यस्य वृत्तिद्वारा वृत्तिमदन्तःकरणसंबन्धेन प्रमातृत्वप्राप्तौ सत्यां प्रमातुस्तद्द्रष्टृत्वं संभवतीत्यर्थः ॥

( ३ ) अपरे तु—द्वितीयपक्षं समर्थयन्ते—अहङ्काराद्युपहितजीवचैतन्यमेवाधिष्ठानम्, नत्वहङ्कारविशिष्टम्। अतो नाहं गज इत्याद्यनुभवापत्तिरिति ॥

( ४ ) केचित्तु—अन्तःकरणोपहितस्य स्वप्नाधिष्ठानत्ववत् वृत्तिमदन्तःकरणप्रतिबिम्बितशुक्तीदमंशावच्छिन्नचैतन्ये शुक्तिरजताद्यध्यस्यते, न तु सर्वसाधारणबिम्बचैतन्ये; सुखादिवदनन्यवेद्यत्वादिति ॥

( ५ ) इतरे तु—इदमंशावच्छिन्नबिम्बभूतब्रह्मचैतन्य एव तदध्यासः। तत्तदविद्याश्रयपुरुषग्राह्यत्वात्तस्यैव प्रत्यक्षं नान्यस्येत्यनन्यवेद्यत्वं समर्थयन्ते ॥

॥ ( ७ ) ॥

ननु शुक्तिरजतादौ चाक्षुषत्वानुभवः साक्षात्परम्परया वा साध्यताम्। स्वाप्नपदार्थेषु तादृशानुभवः कथमुपपन्न इति चेत्—

(१) अत्राहुः केचित्—स्वप्ने चक्षुरादीन्द्रियाणामुपरतत्वात् श्रुत्यादौ स्वयंज्योतिष्ट्ववादे[1] तथैव प्रतिपादनाच्च, चाक्षुषत्वानुभवो भ्रम एवेति ॥

( २ ) दृष्टिसृष्टिवादिनस्तु—अत्यन्तोत्तमाधिकारिणां कृत्स्नस्य जाग्रत्प्रपञ्चस्य दृष्टिसमकालसृष्टिमभ्युपेत्य[2] कल्पितस्याज्ञातसत्त्वाभावात् दृष्टेः पूर्वं घटाद्यभावेन जाग्रदर्थानुभवस्यापि स्वाप्नवदेव अनैन्द्रियकत्वात् केवलसाक्षिरूपत्वमित्याहुः ॥

॥ ( ८ ) ॥

---

१ "अत्रायं पुरुषः स्वयंज्योतिर्भवति" इत्यादि, बृहदारण्यकोपनिषदि चतुर्थाध्याये तृतीयब्राह्मणे नवमखंडे। २. दृष्ट्या सह समः कालः यस्याः सा-सा चासौ सृष्टिश्चेति—ताम्।

ननु दृष्टिसृष्टिवादे—साविद्यस्य प्रपञ्चजातस्य निरुपाधिकः शुद्ध आत्मा कल्पक इति न शक्यते वक्तुम्, मोक्षेपि कल्पकसत्त्वेन प्रपञ्चानुवृत्तिप्रसङ्गात्; नाप्यविद्योपहितः, तस्य कल्पकत्वे अविद्यासृष्टेः पूर्वमविद्योपहितस्य कल्पकस्याभावात् अविद्यासृष्ट्यनुपपत्त्या संसारानुपलब्धिप्रसङ्ग इति चेत्—

( १ ) अत्राहुः केचित्—अनिदम्पूर्वकत्वेन कल्पककल्पनाप्रवाहस्यानादित्वात् पूर्वपूर्वकल्पिताविद्योपहित उत्तरोत्तराविद्याकल्पकः। न चाविद्याया अनादित्वे कल्पितत्वं न स्यादिति शङ्क्यम्; यथा स्वप्ने कल्प्यमानं गोपुरादि किञ्चित्पूर्वसिद्धत्वेन किञ्चित्तदानीमुत्पन्नत्वेन च कल्प्यते, तथा जागरेपि किञ्चित्सादित्वेन किञ्चिदनादित्वेन च कल्प्यत इति साद्यनादिविभागोपपत्तेरिति ॥

( २ ) अन्ये तु—अविद्यादेरनादित्वान्न तत्कल्पक आत्मा । किन्त्वेतद्व्यतिरिक्तप्रपञ्चस्यैवेति प्राहुः ॥

( ३ ) अपरे तु—पूर्वं दृष्टिसमसमया विश्वसृष्टिरिति अयमेको दृष्टिसृष्टिवाद उक्तः ॥ इदानीमपरो दृष्टिरेव विश्वसृष्टिरिति। तत्र दर्शनं सृष्टिः अदर्शनं लयः इतिन्यायात्; दृष्टिश्च स्वप्रकाशात्मचैतन्यमेव, सृष्टिशब्दश्च सृज्यमानप्रपञ्चपरः । तथाच दृश्यप्रपञ्चतादात्म्यापन्नं स्वरूपज्ञानमेव प्रपञ्चस्य आद्यक्षणावच्छिन्नं सत् तस्य सृष्टिरित्युच्यत इति॥

( ४ ) इतरे तु—अत्यन्तमन्दाधिकार्यर्थं पूर्वोक्तद्विविधदृष्टिसृष्टिवादाद्विलक्षणं सृष्टदृष्टिवादं रोचयन्ते। सृष्टे=श्रुत्युक्तक्रमेण ईश्वरसृष्टेऽ-

ज्ञातसत्ताके प्रपञ्चे, दृष्टिः—तत्तद्विषयप्रमाणावतरणेन तस्य तस्य ज्ञानं, सृष्टदृष्टिः। अस्मिन्मते प्रपञ्चस्य शुक्तिरजतादिवत् सम्प्रयोग-संस्कार-दोष-रूपकारणत्रयेण वा, अधिष्ठानज्ञान-संस्कार-दोष-रूपकारणत्रयेण वा जन्यासङ्क्रान्त्यकल्पितत्वेन कल्पनासमसमयत्वाभावेपि ज्ञानैकनिवर्त्यतया वा, सदसद्विलक्षणतया वा, प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगितया वा, मिथ्यात्वमभ्युपेयमिति ॥

॥ (९) ॥

ननु वियदादेरिव अहङ्कारतद्धर्माणां पूर्वोक्तमिथ्यात्वमकल्पितत्वेपि सिद्ध्यति, अतो भाष्यटीकाविवरणेषु तदध्यस्तत्वसाधनाय कारणत्रयसम्पादनं किमर्थमिति चेत्—

(१) अत्राहुश्चित्सुखाचार्याः—अहङ्कारादीनामपि केवलसाक्षिभास्यतया शुक्तिरजतादिवत् प्रातिभासिकत्वस्य सिद्धत्वात् न कारणत्रितयसम्पादनवैयर्थ्यमिति ॥

(२) रामाद्वयाचार्यास्तु—अहङ्कारादीनां साक्षिवेद्यत्वेपि व्यवहारदशायां बाधानुपलम्भाद्व्यावहारिकत्वमेव। विवरणे कारणत्रितयसम्पादनं तु प्रौढिवादेनेति ॥

॥ (१०) ॥

ननु दृष्टिसृष्टिवादे सृष्टदृष्टिवादे च जाग्रत्प्रपञ्चस्य मिथ्यात्वेन सम्प्रतिपन्नत्वात् कथमर्थक्रियासमर्थत्वमिति चेत्—

(१) अत्राहुः केचित्—यथा स्वाप्नजलाद्यवगाहनादिरूपस्वसमानसत्ताकार्थक्रियाकारित्वं सर्वसम्प्रतिपन्नं प्रातिभासिकपदार्थानां स-

त्यार्थक्रियाकारित्वाभावेपि, एवं जाग्रत्प्रपञ्चस्यापि तत्समानमिति नैतावता पारमार्थिकसत्यत्वसिद्धिरिति ॥

( २ ) अद्वैतविद्याचार्यास्तु—असत्यस्य सत्यार्थक्रियाकारित्वमपि सम्भवति। प्रातिभासिकस्वाप्नभुजङ्गमाङ्गनादीनां प्रबोधाबाध्यभयकम्पसुखादिव्यावहारिकार्थक्रियाया अपि जनकत्वदर्शनादिति ॥

( ३ ) अन्येतु—स्वाप्नपदार्थानामिव जागरेप्यालोकवत्यपवरके सद्यःप्रविष्टपुरुषकल्पितसन्तमसस्याप्यर्थक्रियाकारित्वं सम्भवतीति ॥

( ४ ) अपरेतु—अर्थक्रियाकारित्वे न सत्यत्वं प्रयोजकम्, अपि तु तत्तत्स्वरूपमात्रम्। मरीच्युदकशुक्तिरजतादेः प्रसिद्धोदकाद्युचितार्थक्रियाकारित्वापादनं तु उदकत्वादिजात्यभावात् निराकरणीयमिति ॥

( ५ ) इतरे तु—मरीच्युदकादावपि उदकत्वादिजातिरस्ति; तद्वैशिष्ट्योल्लेखिभ्रमप्रत्ययदर्शनात्, तदर्थिनस्तत्र प्रवृत्तिदर्शनाच्च। मरीच्युदकादौ तदर्थिप्रवृत्तिरूपाऽर्थक्रिया च सम्भवति। नहि सर्वा अर्थक्रिया सर्वत्र सम्भवति, क्वचित्कासाञ्चिदेवार्थक्रियाणामिष्यमाणत्वादिति ॥

॥ ( ११ ) ॥

ननु प्रपञ्चगतमिथ्यात्वरूपधर्मस्य सत्यत्वेपि ब्रह्मणोऽद्वितीयत्वहानिः। मिथ्यात्वेपि च प्रपञ्चसत्यत्वापत्त्या अद्वैतक्षतिरेवेति चेत्—

( १ ) अत्राहुरद्वैतदीपिकाकाराः—मिथ्यात्वस्य मिथ्यात्वेपि न प्रपञ्चसत्यत्वापत्तिः। [२]प्रपञ्चसमानसत्ताकत्वं हि मिथ्यात्वम्। तच्च

---

१. तत्—स्वसमानसत्ताकार्थक्रियाकारित्वम्। २ प्रपंचः व्यावहारिकसत्ताकः।

धर्मिणः सत्यत्वप्रतिक्षेपकम् ॥ सत्तात्रैविध्यपक्षे—स्वाश्रयसमसत्ताकधर्मस्य स्वविरुद्धधर्मप्रतिक्षेपकत्वमिति मिथ्यात्वप्रयोजकत्वात् । एकसत्तापक्षे तु—स्वाश्रयसाक्षात्कारानिवर्त्यधर्मस्य स्वविरुद्धधर्मप्रतिक्षेपकत्वमिति च मिथ्यात्वप्रयोजकत्वात् । एवञ्च कल्पितमपि प्रपञ्चमिथ्यात्वं प्रपञ्चसाक्षात्कारानिवर्त्यत्वात् सत्यत्वप्रतिक्षेपकमेव । ब्रह्मनिष्ठसप्रपञ्चत्वं तु ब्रह्मसाक्षात्कारनिवर्त्यत्वान्न निष्प्रपञ्चत्वप्रतिक्षेपकमिति ॥

॥ ( १२ ) ॥

ननु वियदादिप्रपञ्चस्य मिथ्यात्वे सिद्धेपि सुखदुःखादिव्यवस्थया परस्परभिन्नानां जीवानामेकेन ब्रह्मणैक्यासम्भवात् तेषामपवर्गभाक्त्वेन सत्यत्वाच्च नाद्वैतसिद्धिरिति चेत्—

( १ ) अत्राहुः केचित्—न हि जीवानां सच्चिदाद्यात्मनां परस्परं भेदः सम्भवति[१] । सुखदुःखादिव्यवस्थायास्तूपाधिभेदादेवोपपत्तेरिति ॥

॥ ( १३ ) ॥

ननु उपाधिभेदेप्यात्मनोऽभेदानपायात् कथं सुखदुःखादिव्यवस्था सिद्धचतीति चेत्—

( १ ) अत्राहुः केचित्—"असङ्गो ह्ययम्पुरुषः" "असङ्गो न हि सज्जते" इत्यादिश्रुतिभिश्चिन्मात्रस्यात्मन औदासीन्यप्रतिपादनात्, "कामः सङ्कल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वम्मन एव" "विज्ञानं यज्ञं तनुते" इत्यादिश्रुतिभिरन्तःकरणस्यैव सुखदुःखाद्यखिलानर्थाश्रयत्वप्रतिपादनाच्च तद्भेदादेव सुखदुःखादिव्यवस्था सिद्धचतीति ॥ कथं तर्ह्यात्मनः कर्तृत्वादिबन्धाश्रयत्वेन अहङ्कर्ता सुखी-

---

१. भेदे प्रमाणाभावात्, अभेदे च "एको देवः सर्वभूतेषु" इत्यादिश्रुतेरित्यर्थः ।

त्यादिव्यवहारः इतिन शङ्कयम्,कर्तृत्वादिबन्धाश्रयाहङ्कारतादात्म्याध्यासाधिष्ठानत्वेन तस्य तादृशभ्रमोपपत्तेः । न चान्तःकरणधर्माणामपि सुखदुःखादीनां अनुभवरूपस्य साक्षिण एकत्वात् सुखदुःखादिव्यवस्था न स्यादिति वाच्यम्, तत्तदन्तःकरणभेदेन तत्तदुपहितस्य साक्षिणोपि सुखदुःखाद्यनुभवरूपस्य भेदात् तद्व्यवस्थोपपत्तेरिति ॥

( २ ) अन्ये तु—जडस्य कर्तृत्वादिबन्धाश्रयत्वानुपपत्तेः 'कर्ता[1] शास्त्रार्थवत्त्वादि'ति न्यायेन चेतनस्यैव कर्तृत्वाद्याश्रयत्वप्रतीतेश्चिदाभास एव तदाश्रयः इति। तस्य चोपाधिभेदेन भेदात् सुखदुःखादिव्यवस्थोपपत्तिः । न चैवं चिदाभासस्य बन्धाश्रयत्वे तस्य च मिथ्यात्वाद्बन्धमोक्षयोर्वैयधिकरण्यापत्तिरिति वाच्यम् । स्वरूपतः सत्यतया मुक्त्यन्वयिनि परमार्थजीवे चिदाभासस्याध्यस्तत्वात् । बन्धो नाम कर्तृत्वाद्याश्रयचिदाभासतादात्म्याध्यासाधिष्ठानत्वमेवेति ॥

( ३ ) अपरे तु—"आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः" इत्यादिश्रुत्या देहादिविशिष्टस्यैव भोक्तृत्वश्रवणात् देहादिभेदेन तद्विशिष्टभेदाद्व्यवस्था युक्ता। तथा च विशिष्टगतबन्धस्य विशेष्यान्वयिनो मुक्त्यन्वयिनि केवलात्मन्यप्यन्वयः सिद्ध इति बन्धमुक्त्योर्न वैयधिकरण्यमिति ॥

( ४ ) इतरे तु— शुद्धचिन्मात्रात्मैव कर्तृत्वादिबन्धाश्रयः, स्फ[2]-

---

१ ब्रह्मसूत्राणि अ. २ पा. ३ सू. ३३ । २ लौहित्याश्रयस्य जपाकुसुमादेः सन्निधानात् यथा स्फटिके उपाधिभूतजपाकुसुमगतलौहित्यप्रतिबिंबभूतस्य लौहित्यान्तरस्योत्पत्तिः ।

टिकलौहित्यन्यायेन कर्तृत्वाद्याश्रयान्तःकरणसान्निध्यात् आत्मनि कर्तृत्वाद्यन्तरस्याध्यासात्। तस्य चात्मन एकत्वेप्युपाधिभेदात् सुखदुःखादिव्यवस्थोपपत्तेः। न ह्यन्यभेदादन्यत्र विरुद्धधर्मव्यवस्थाऽनुपपन्नेति वाच्यम्। एकस्मिन्वृक्षे मूलाग्रोपाधिभेदमात्रेण संयोगतदभावव्यवस्थादर्शनात्। एकस्याप्याकाशस्य कर्णशष्कुल्याद्युपाधिभेदेनैव श्रोत्रेन्द्रियत्वाद्यापन्नस्य पुरुषभेदेन तत्र[1] तत्र विचित्रशब्दज्ञानजनकत्वदर्शनाच्चेति ॥

( ५ ) एके तु—आश्रयभेदादेव विरुद्धधर्मव्यवस्थेति नियममनुसृत्य यथा मणिमुकुराद्युपाधिकल्पितप्रतिबिम्बरूपाश्रयभेदादेव श्यामावदातत्वादिधर्मव्यवस्था, यथावा अङ्गुल्याद्युपाधिकल्पितनानादीपरूपाश्रयभेदादेव पाश्चात्यपौरस्त्यादिधर्मव्यवस्था च, एवं एकस्मिन्नेव निष्कृष्टचैतन्ये कल्पितान्तःकरणरूपोपाधिभेदेन नानात्वमापन्नजीवरूपाश्रयभेदादेव सुखदुःखादिव्यवस्था सम्प्रतिपन्नेति ॥

॥ ( १४ ) ॥

ननु जीवानां परस्परं सुखदुःखाद्यननुसन्धाने उपाधिरेव प्रयोजक इत्युपपादितम्। कोऽसावुपाधिरिति चेत्—

( १ ) अत्राहुः केचित्—भोगायतनस्य देहतदवयवहस्तादिरूपस्य भेद एव तदननुसन्धानप्रयोजकोपाधिरिति ॥

(२) अन्ये तु—विश्लिष्टोपाधिभेद एवाननुसन्धानप्रयोजकः। विश्लेषश्च एकस्मिन्नवयविनि अवयवभावेन अननुप्रवेशः। मातृगर्भस्थशरीरयो[2]स्तथात्वादेव[3] न गर्भगतस्य मातृसुखाद्यनुसन्धानप्रसङ्गः। करचरणादीनां संश्लिष्टत्वादेवेतरेतरानुसन्धानसिद्धिः। तथाच अदृष्टविशेषासहकृतस्य

---

१ भिन्नभिन्नात्मनि। २. मातुः तद्गर्भस्थशरीरस्य च इति विग्रहः। ३. विश्लिष्टत्वादेव।

भोगायतनभेदादेरननुसन्धानप्रयोजकत्वस्य विवक्षितत्वात् न योगिजातिस्मरादिषु व्यभिचार इति ॥

( ३ ) अपरे तु—प्रत्यभिज्ञानायोग्यशरीरभेद एवाननुसन्धानप्रयोजकोपाधिः । न च बाल्ययौवनादिशरीराणामपि भेदः शङ्क्यः, एकत्वप्रत्यभिज्ञानात् । विवर्तवादे विनैवोपचयं मायया केवलं शरीरस्य ऐन्द्रजालिकशरीरवत् वृद्ध्युपपत्तेः, परमाणुप्रक्रियया आरम्भवादे शरीरभेदस्यानभ्युपगमाच्चेति ॥

( ४ ) इतरे तु—अन्तःकरणरूपोपाधिभेद एवाननुसन्धानव्यवस्थाप्रयोजक इति ॥

( ५ ) एके तु—जीवोपाधिभूताज्ञानानि नाना इत्यभ्युपेत्य तद्भेद एवाननुसन्धानप्रयोजक इति ॥

एवञ्च अस्मन्मते ब्रह्मात्मैक्यपर "तत्त्वमसि" "अहम्ब्रह्मास्मि" "अयमात्मा ब्रह्म" इत्यादिमहावाक्यानुरोधेन अवान्तरवाक्यानां तात्पर्यवर्णनस्योचितत्वात्, जीवस्य "आकाशवत्सर्वगतश्च नित्यः" "महान्तं विभुमात्मानम्" "महद्भूतमनन्तमपारं" "विज्ञानघन एव" "तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यम्" "अयमात्मा ब्रह्म सर्वानुभूः" "एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा" इत्यादिश्रुतिभिर्विभुत्वप्रतिपादनात्, परिच्छेद औपाधिक इति भाष्यादिषूभयश्रुत्युपपादनं[1] कृतम् । तस्मादचेतनप्रपञ्चस्य मिथ्यात्वात्, चेतनप्रपञ्चस्य जीवस्य ब्रह्माभेदाच्च, सर्वेषां वेदान्तानामद्वितीये ज्ञानैकगम्ये ब्रह्मणि समन्वयेनाविरोधः सिद्धः इति ॥

इति श्रीवासुदेवब्रह्मेन्द्रसरस्वतीविरचिते सिद्धान्तलेशतात्पर्यसंग्रहे
द्वितीयपरिच्छेदः संपूर्णः ॥

---

१. औपाधिकपरिच्छिन्नत्व—स्वाभाविकविभुत्व—प्रतिपादकोभयश्रुत्युपपादनम् ।

॥ ॐ ॥

## अथ तृतीयपरिच्छेदः ॥

॥ ( १ ) ॥

ननु ब्रह्म ज्ञानेनैवाप्यत इति कथम् । यत्कारणं " तत्प्राप्तिहेतुर्विज्ञानं कर्म चोक्तं महामुने " ॥ इत्यादिस्मृत्या कर्मणामपि ब्रह्मप्राप्तिहेतुत्वमुच्यत इति चेत्—

( १ ) अत्राहुः केचित्—सत्यमेवोक्तम्, तथापि स्वकण्ठाभरणवत् नित्यसिद्धब्रह्मस्वरूपस्यापि सतः स्वाज्ञानमेव स्वस्वरूपाप्राप्तिरिति तदज्ञाननिवृत्तिरूपस्वप्राप्तौ ज्ञानमेव केवलं साधनं नान्यदिति "तमेव विदित्वा अतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय" "ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः " इत्यादिश्रुतिस्मृत्यादिभिर्निश्चितमवगम्यते । क्रियात्मकानां कर्मोपासनानां तु चित्तशुद्धिचित्तैकाग्र्यसम्पादनेन ज्ञानोत्पत्तिद्वारा ब्रह्मावाप्तौ साधनता प्रतिपाद्यत इति " तत्प्राप्तिहेतुर्विज्ञान"मित्यादिपूर्वोक्तस्मृतेरर्थ इति ॥

॥ ( २ ) ॥

ननु कर्मणां क्वोपयोग इति चेत्—

( १ ) अत्राहुर्भामतीकाराः—'प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः, तयोस्तु प्रत्ययः प्राधान्येन' इति न्यायेन प्रत्ययार्थस्य प्राधान्यात् "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति" इत्यादिश्रुतौ यज्ञादीनां विद्यासम्पादनद्वारा ब्रह्मप्राप्त्युपायभूतायां विविदिषायामुपयोग इति ॥

( २ ) विवरणानुसारिणस्तु—'इच्छेष्यमाणसमभिव्याहारे[1] इष्य-

---

१ इच्छा च इष्यमाणं च तयोः समभिव्याहारे युगपत्कथने ।

माणस्यैव प्राधान्यम्, नत्विच्छायाः' इति विशेषन्यायेन इष्यमाणे प्रकृत्यर्थभूते ज्ञाने एव यज्ञादीनामुपयोग इति ॥

ननु—"तमेतमि"त्यादिश्रुत्युक्तविनियोगः केषां कर्मणाम्, किं सामान्येन सर्वेषां कर्मणाम्, उत आश्रमकर्मणामेवेति चेत्—

अत्राहुः केचित्—वेदानुवचन-यज्ञ-दान-तपआद्याश्रमत्रयधर्मप्रतिपादकश्रुतिभिः सर्वाश्रमकर्मणामेव विद्योपयोग इति ॥

कल्पतरुकारास्तु—"अन्तरा चापि तु तद्दृष्टेः"[1] इत्यधिकरणोक्तरीत्या नाश्रमधर्माणामेव विद्योपयोगः, किन्तु विधुराद्यनुष्ठितकर्मणामपि । तत्रापि "विशेषानुग्रहश्च"[2] इति सूत्रभाष्ययोस्तदनुष्ठितजपादिनित्यकर्मणामेव विद्योपयोगः स्पष्टमुक्तः । तत्फलस्य दुरितक्षयस्य विद्ययाऽपेक्षितत्वादिति ॥

सङ्क्षेपशारीरके तु—यज्ञादिशब्दानां नित्ययज्ञादिष्विव काम्ययज्ञादिष्वपि रूढत्वाविशेषात् नित्यानामिव काम्यानामपि श्रुत्या विनियोगो भातीति नित्यकाम्यसाधारण एवायं विनियोग इति ॥

॥ ( ३ ) ॥

ननु विविदिषाद्वारा विद्यायां विनियुक्तानां कर्मणां ब्राह्मणमात्राधिकारिकत्वं वक्तव्यं, न क्षत्रियादीनाम्, विविदिषावाक्ये ब्राह्मणपदमात्रस्य श्रवणादिति चेत्—

( १ ) अत्राहुः केचित्—विविदिषावाक्यस्थब्राह्मणपदस्य त्रैवर्णिकोपलक्षकत्वमेव युक्तम् ।

---

१ ब्रह्मसू. ३।४।३६। २ ब्रह्मसू. ३।४।३८।

" ब्राह्मणग्रहणं चात्र द्विजानामुपलक्षणम् ।
अविशिष्टाधिकारित्वात्सर्वेषामात्मबोधने ॥ " इति वार्तिकोक्तेरिति ॥

ननु—विद्यार्थकर्मसु शूद्रस्याप्यधिकारप्रसङ्गः, ब्राह्मणपदस्य विद्याधिकारिमात्रोपलक्षणत्वे शूद्रस्यापि विद्यायामर्थित्वरूपाधिकारिविशेषणसम्भवादिति चेत्—

( १ ) अत्राहुः केचित्—अपशूद्राधिकरणन्यायेन अध्ययनविधिना वेदजन्यवेदार्थज्ञानस्य वेदार्थानुष्ठाने नियमितत्वात् अध्ययनशून्यशूद्रस्य तदभावात् न सगुणनिर्गुणविद्यानुष्ठानेष्वधिकार इति तत्तुल्यतया विद्यार्थकर्मस्वप्यधिकारो नास्तीति ॥

( २ ) अन्ये तु—वेदानुवचनाग्निहोत्राद्यसम्भवेपि शूद्रस्य विद्यार्थकर्मसु स्ववर्णाश्रमोचितेषु स्मार्तपौराणिकागमिकेषु श्रीपञ्चाक्षरजपपाकयज्ञद्विजशुश्रूषानामकीर्तनतीर्थस्नानसत्याक्रोधशौचाचमनार्थपाणिपादप्रक्षालनश्राद्धकर्मभृत्यभरणस्वदारतुष्ट्यादिष्वधिकारस्मरणादस्त्येवाधिकारः। न च अपशूद्राधिकरण-'न शूद्राय मतिं दद्यात्' 'न शूद्रे पातकं किञ्चित्' इत्यादिश्रुतिस्मृतिन्यायविरोध इति वाच्यम् । तद्वचनानां सगुणनिर्गुणविद्यासाधनवेदान्तश्रवणादिष्वधिकारनिषेधपरत्वात्। किञ्च विषयसौन्दर्यप्रयुक्तार्थित्वस्य निषेद्धुमशक्यत्वेन तस्य शूद्रस्य, यद्यपि वेदान्तश्रवणाधिकाराभावः उक्तः तथापि भाष्यकारैरपशूद्राधिकरणोपसंहारे " श्रावयेच्चतुरोवर्णान् कृत्वा ब्राह्मणमग्रतः"। इत्यादिस्म-

---

१ 'तेषामात्मावबोधने' इति मुद्रितपुस्तकपाठः । २ बृहदा० वार्तिक० ४।४। १०२९। ३ ब्र. सू. १।३।३४।

रणात् ब्रह्मात्मैक्यपरपुराणादिश्रवणे विद्यासाधने अधिकारस्य दर्शितत्वेन च तस्य, तदर्थजपादिकर्मानुष्ठानं विद्योत्पत्तियोग्यविमलदेवशरीरनिष्पादनद्वारा मुक्त्यर्थं वा, वेदान्तश्रवणयोग्यत्रैवर्णिकशरीरनिष्पादनद्वारा विद्यार्थं वा भविष्यतीति ॥

॥ ( ४ ) ॥

ननु कर्मणां चित्तशुद्धिद्वारा विद्योपयोगः साधितः, अधुना संन्यासस्य विद्योपयोगः किं दृष्टद्वारा उतादृष्टद्वारेति चेत्—

( १ ) अत्राहुः केचित्—विद्योत्पत्तिप्रतिबन्धकदुरितानि द्विविधानि, यज्ञाद्यपूर्वनिवर्त्यानि संन्यासापूर्वनिवर्त्यानि चेति। तत्र संन्यासापूर्वमपि कर्मवत् चित्तशुद्धिद्वारैव विद्यायामुपमुज्यते । अत एव गृहस्थाद्यसन्न्यासिकृतवेदान्तश्रवणादि इह जन्मनि जन्मान्तरे वा संन्यासापूर्वनिवर्त्यदुरितक्षयद्वारैव विद्यां जनयेत्। संन्यासानधिकृतक्षत्रियादीनां तु पूर्वजन्मानुष्ठितसंन्यासमहिम्ना इह जन्मन्यपि विद्या जायेतेति॥

( २ ) अन्ये तु—“शान्तो दान्त उपरतः” सन्न्यासी “सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत्” तद्वतः—विद्यावतःसन्न्यासिनः—

“त्यक्ताशेषक्रियस्यैव संसारं प्रजिहासतः ।
जिज्ञासोरेव चैकात्म्यं त्रय्यन्तेष्वधिकारिता॥”

इत्यादिश्रुतिसूत्रवार्तिकोक्तिषु “उपरतः,तद्वतः, त्यक्ताशेषक्रियस्ये” तिशब्दगृहीतस्य सन्न्यासस्य साधनचतुष्टयान्तर्गतत्वेनाधिकारिविशेषणसमर्पकतया उक्तत्वादपूर्वद्वारैव विद्योपयोग इति ॥

---

१ ब्र. सू. ३।४।४७॥

( ३ ) अपरे तु—'दृष्टद्वारे सम्भवत्यदृष्टकल्पनायोगादि'तिन्यायात् सन्न्यासस्य विक्षेपाभावरूपदृष्टद्वारा श्रवणाङ्गत्वेनात्मज्ञाने उपयोगः। अत एव इतराश्रमिणोऽपि सात्विकस्य विषयदोषदृष्ट्या जितेन्द्रियस्य कर्मच्छिद्रेषु वेदान्तश्रवणादिषु कदाचित् प्रवृत्तिः स्यादिति तन्निरासाय सन्न्यासिनैव श्रवणादि कर्तव्यमिति तत्र नियमविधिरभ्युपेय इति ॥

॥ ( ५ ) ॥

ननु "ब्राह्मणोनिर्वेदमायात्" "ब्राह्मणोऽव्युत्थाय" "ब्राह्मणःप्रव्रजेत्" इत्यादिश्रुतिषु ब्राह्मणपदग्रहणेन सन्न्यासस्य श्रवणाद्यङ्गत्वेन विधौ ब्राह्मणमात्राधिकारिकत्वप्रतीतेः तद्रहितयोः क्षत्रियवैश्ययोः कथं वेदान्तश्रवणाद्यनुष्ठानमिति चेत्—

( १ ) अत्राहुः केचित्—"यदिवेतरथा ब्रह्मचर्यादेव प्रव्रजेद्गृहाद्वा वनाद्वा"इत्यादिसाधारणश्रुत्या, तदर्थानुवादिन्या

"ब्राह्मणः क्षत्रियो वापि वैश्यो वा प्रव्रजेद्गृहात् ।
त्रयाणामपि वर्णानाममी चत्वार आश्रमाः" ॥ इत्यादिस्मृत्या
"त्रयाणामविशेषेण सन्न्यासः श्रूयते श्रुतौ ।
यदोपलक्षणार्थं स्याद्ब्राह्मणग्रहणं तदा" ॥

इत्यादिवार्तिकवचनेन च क्षत्रियवैश्ययोरपि सन्न्यासाधिकारस्य सिद्धत्वेन श्रुत्यन्तरेषु ब्राह्मणग्रहणं त्रयाणामुपलक्षणार्थमिति ॥

( २ ) अन्ये तु—सर्वेषु सन्न्यासविधायकश्रुतिवाक्येषु ब्राह्मणग्रहणात् "यदिवेतरथा" इत्यादिजाबालश्रुतौ ब्राह्मणपदाभावेपि "ब्राह्मणो व्युत्थाये" त्यादिबहुश्रुत्यन्तरसिद्धब्राह्मणाधिकारिकत्वमेव सन्न्यासस्य वक्तव्यम्। स्मृतिवचनं तु [1]विरोधाधिकरणन्यायेन श्रुतिविरुद्धत्वात् न

[1] प्रत्यक्षश्रुतिविरुद्धं स्मृतिवचनमप्रमाणम् इति ।

आदर्तव्यमेव ॥ अथवा

"सर्वाधिकारविच्छेदि ज्ञानं चेदभ्युपेयते ।
कुतोऽधिकारनियमो व्युत्थाने क्रियते बलात् ॥"

इति वार्तिकवचनेन ब्रह्मापरोक्षज्ञानोदयानन्तरं जीवन्मुक्तिदशायां सर्वाधिकारविच्छेदे सर्वेषां विद्वत्सन्न्यासे एवाधिकारप्रदर्शनपरमिति ॥ एवंच विविदिषापक्षे ब्राह्मणानामेव श्रवणाद्यङ्गत्वेन सन्न्यासविधानम्, नेतरयोः । तयोस्तन्निरपेक्षमेव श्रवणाद्यधिकारो देववदिति ॥

( ३ ) अपरे तु—"ब्रह्मसंस्थोऽमृतत्वमेति" इत्यादिश्रुतौ,

"गच्छतस्तिष्ठतो वापि जाग्रतः स्वपतोपि वा ।
न विचारपरं चेतो यस्यासौ मृत उच्यते ॥
आसुप्तेरामृतेः कालं नयेद्वेदान्तचिन्तया ।
दद्यान्नावसरं किंचित्कामादीनां मनागपि ॥
त्वम्पदार्थविवेकाय सन्न्यासः सर्वकर्मणाम् ।
श्रुत्या विधीयते यस्मात्तत्त्यागी पतितो भवेत्" ॥

इत्यादिस्मृतिषु च सर्वदाऽमृतत्वकामस्य ब्रह्मण्यनन्यव्यापारतया विचारविधानात्, तस्य च सन्न्यासं विनाऽसम्भवात्, सन्न्यासिन एव श्रवणे मुख्याधिकारः । तथा देवानामनुष्ठेयकर्माभावेन तत्सन्न्यासाभावेपि मुख्याधिकार एव । इतरयोः शूद्रवत्प्रतिषेधाभावाद्विधुरादीनामिव वेदान्तश्रवणेऽमुख्योऽधिकारः सन्न्यासाभावात्, स्वस्वाश्रमकर्मानुष्ठान एव तस्य मुख्यत्वाच्च जन्मान्तरे तस्य श्रवणस्य विद्याजनकत्वमिति ॥

---

१ बृहदा० वार्तिक. ३।२।९० । तत्र मुद्रितपुस्तके "कर्माधिकारविच्छेदि' इति पाठः ।

॥ ( ६ ) ।

ननु अमुख्याधिकारिकृतवेदान्तविचारस्य जन्मान्तरे विद्याजनकत्वं न सङ्गच्छते दृष्टफलभूतवाक्यार्थावगत्यर्थत्वाद्विचारस्येति चेत्—

( १ ) अत्राहुः केचित्—अमुख्याधिकारिणापि विविदिषुणा क्रियमाणं वेदान्तश्रवणं विविदिषोत्पादकयज्ञाद्यनुष्ठानजन्यापूर्वद्वारा जन्मान्तरीयायामपि विद्यायामुपकारं करोतीति ॥

श्रवणादौ विध्यभावपक्षे सन्न्यासिना क्रियमाणस्यापि श्रवणस्यैहिकविद्याजननेऽदृष्टानपेक्षत्वेपि प्रतिबन्धे सति जन्मान्तरे तस्य विद्याजननेऽदृष्टमेव द्वारमेष्टव्यमिति ॥

( २ ) आचार्यास्तु—नियमविधिपक्षेऽपि यावद्ब्रह्मज्ञानोदयमावर्त्यमानमेव श्रवणं नियमादृष्टं जनयति, न तु फलपर्यन्तश्रवणावृत्तेः प्राक्, इत्यस्मिन्पक्षेपि पूर्वोक्तनियमादृष्टकल्पनाप्रकारेणैव निर्वाहः कर्तव्य इति ॥

( ३ ) अपरे तु—दृष्टार्थस्यैव श्रवणस्य

"दिने दिने तु वेदान्तश्रवणाद्भक्तिसंयुतात् ।
गुरुशुश्रूषया लब्धात्कृच्छ्राशीतिफलं लभेत् ॥"

इत्यादिवचनप्रामाण्यात् स्वतन्त्रादृष्टोत्पादकत्वमप्यस्तीति श्रवणादृष्टमहिम्नैवामुष्मिकविद्योपयोगित्वमिति ॥

---

१. वाचस्पतिमते । २. विवरणाचार्याः ।

॥ ( ७ ) ॥

ननु—पूर्वोक्तसाङ्ख्यमार्गे श्रवणादावशक्तस्य मन्दाधिकारिणो मुमुक्षोर्विद्यावाप्तौ क उपाय इति चेत्—

अत्राहुर्भारतीतीर्थाः—"तत्कारणं साङ्ख्ययोगाभिपन्नम्" । "यत्साङ्ख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते ॥" इत्यादिश्रुतिस्मृतिप्रामाण्यात् साङ्ख्यानां विद्यावाप्तौ मनननिदिध्यासनसहकृतश्रवणात्मकवेदान्तविचार इव मन्दानां योगशब्दितं निर्विकल्पकब्रह्मध्यानमपि आनन्दादिभिरस्थूलादिभिश्चोपलक्षितमखण्डैकरसमद्वितीयं ब्रह्माहमस्मीत्येवम्भूतं अविसंवादिभ्रमन्यायेन[1] ब्रह्मसाक्षात्कारे कारणम् ॥ अयमत्र विशेषः—बुद्धिमान्द्यादिप्रतिबन्धकाभावे पुरुषधौरेयस्य श्रवणादिना ब्रह्मसाक्षात्कारो झटिति सिद्ध्यतीति साङ्ख्यो मार्गो मुख्यः कल्पः । मन्दानां तु केवलनिर्गुणोपास्त्या विलम्बेन सिध्यतीति योगमार्गोऽनुकल्प इति ॥

॥ ( ८ ) ॥

ननु अस्मिन्साङ्ख्ययोगपक्षद्वयेपि ब्रह्मसाक्षात्कारफले किं करणमिति चेत्—

( १ ) अत्राहुः केचित्—योगमार्गे प्रत्ययाभ्यासरूपप्रसङ्ख्यानस्य, साङ्ख्यमार्गे निदिध्यासनरूपप्रसङ्ख्यानस्य च करणत्वं "ततस्तु तं पश्यते निष्कलं ध्यायमानः" "ध्यानेनात्मनि पश्यन्ति केचिदात्मा-

1. विसंवादः फलाभावः, तद्रहितोऽविसंवादिभ्रमः । फलवद्भ्रम इति यावत् ॥

नमात्मना" इत्यादिश्रुतिस्मृतिभिः सिद्धम् ॥ न च प्रसङ्ख्यानस्य प्रमाणकोट्यप्रविष्टत्वात्तज्जन्यब्रह्मसाक्षात्कारोऽपि प्रमा न भवेदिति शङ्क्यम्, क्लृप्तप्रमाणाजन्यत्वेपि ईश्वरीयमायावृत्तिवत् प्रमात्वोपपत्तेः। प्रसङ्ख्यानस्य च करणत्वं कामातुरस्य व्यवहितकामिनीसाक्षात्कारे क्लृप्तमिति च लोके प्रसिद्धमिति ॥

( २ ) अन्ये तु—"एषोऽणुरात्मा चेतसा वेदितव्यः" "दृश्यते त्वग्र्यया बुद्ध्या" इत्यादिश्रुत्या मन एव प्रसङ्ख्यानसहकृतं ब्रह्मसाक्षात्कारे करणम्। मनसः करणत्वं "अहमेवेदं सर्वोस्मीति मन्यते सोऽस्य परमो लोक" इति श्रुत्या स्वप्ने ब्रह्मसाक्षात्काराय बोधितम्, तदा करणान्तराभावात्। तद्वदिहापि ॥ कामातुरकामिनीसाक्षात्कारादावपि प्रसङ्ख्यानसहकृतं मन एव करणमिति दृष्टमिति ॥

( ३ ) अपरे तु—"तद्धास्य विजज्ञौ" "तमसः पारं दर्शयति" "आचार्यवान्पुरुषो वेद" "वेदान्तविज्ञानसुनिश्चितार्थाः" "तन्त्वौपनिषदम्पुरुषम्" इत्यादिश्रुतिषु ब्रह्मण उपनिषदेकसमधिगम्यत्वश्रवणात् योगमार्गेण साङ्ख्यमार्गेण वा दृष्टादृष्टलक्षणसकलप्रतिबन्धक्षये सति अप्रतिबद्धं सदौपनिषदं महावाक्यमेव ब्रह्मसाक्षात्कारे करणम्, न मनः, "यन्मनसा न मनुत" इत्यादिनिषेधश्रवणादिति ॥

## ॥ ( ९ ) ॥

ननु परोक्षज्ञानजनकत्वस्वभावस्य शब्दस्य महावाक्यस्य कथमपरोक्षब्रह्मज्ञानजनकत्वमिति चेत्—

( १ ) अत्राहुः केचित्—स्वतोऽसमर्थोपि शब्दः श्रवणमनन-

निदिध्यासनजनितसंस्कारलब्धब्रह्मैकाग्र्यवच्चित्तानुगृहीतः सन्नपरोक्षमपि ज्ञानं जनयत्येव । "तरति शोकमात्मविदि"ति श्रुतौ शोकोपलक्षितकर्तृत्वाद्यध्यासस्य अपरोक्षस्याअपरोक्षात्मज्ञाननिवर्त्यत्वप्रतिपादनात्, अन्यथा तस्य च परोक्षस्य अपरोक्षभ्रमनिवर्तकत्वायोगात् । औपनिषद्ब्रह्मणि वेदेतरप्रमाणासम्भवात्, "वेदान्तविज्ञानसुनिश्चितार्थाः" "परामृताः परिमुच्यन्ति सर्वे" "विद्वान्नामरूपाद्विमुक्तः" "परम्ब्रह्म वेद ब्रह्मैव भवति" इत्यादिश्रुतिषु ज्ञानादेव कैवल्यश्रवणाच्च शब्दस्य अपरोक्षज्ञानकरणत्वं शास्त्रप्रामाण्यात्स्वीकर्तव्यमिति ॥

( २ ) अन्ये तु—बहिरसमर्थस्यापि मनसो ध्यानाभ्याससाहाय्यात् नष्टवनितासाक्षात्कारजनकत्वं दृष्टमिति निदिध्यासनसहकृतशब्दस्यापि अपरोक्षज्ञानजनकत्वं युक्तमेवेति ॥

( ३ ) अपरे तु—अपरोक्षार्थविषयकत्वं ज्ञानस्यापरोक्षत्वम् । न त्विन्द्रियजन्यज्ञानत्वादि । अर्थापरोक्ष्यं च–[स्वव्यवहारानुकूलचैतन्याभिन्नत्वम् ] तत्तत्प्रमातृचैतन्याभिन्नत्वम् । न तु अपरोक्षज्ञानविषयत्वम् । अतो नान्योन्याश्रयः । एवं च "यत्साक्षादपरोक्षाद्ब्रह्मे"ति श्रुत्या स्वत एव नित्यापरोक्षरूपत्वात्, "एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा" इत्यादि श्रुत्या सर्वदा सर्वपुरुषचैतन्यरूपत्वेन तदभिन्नत्वाच्च ब्रह्मणः तद्विषयकस्य शाब्दस्यापि ब्रह्मज्ञानस्यापरोक्षत्वं युक्तमेवेति ॥

( ४ ) अद्वैतविद्याचार्यास्तु—तत्तदर्थाभिन्नत्वे सति तत्तदर्थव्यव-

---

१. ०काग्र्ययुक्तचित्ता० इत्यर्थः ।

हारानुकूलज्ञानत्वं ज्ञानापरोक्ष्यम् । स च चैतन्यस्यैव धर्मः, नान्तःकरणवृत्तिधर्मः । अर्थापरोक्ष्यं तु--स्वव्यवहारानुकूलचैतन्याभिन्नत्वम् । एवं च अन्तःकरणतद्धर्माणामापरोक्ष्यं च स्वव्यवहारानुकूलसाक्षिचैतन्याभिन्नत्वम्, तेषां तत्राध्यस्तत्वात् । बहिर्घटादीनामापरोक्ष्यं च स्वव्यवहारानुकूलाधिष्ठानचैतन्याभिन्नत्वम् । ब्रह्मणश्चापारोक्ष्यं स्वव्यवहारानुकूलवृत्त्युपहितसाक्षिचैतन्याभिन्नत्वम् ॥ चैतन्यरूपज्ञानस्य तत्तदर्थव्यवहारानुकूलत्वे सति तत्तदर्थाधिष्ठानत्वात्तदभिन्नत्वमिति ॥

॥ ( १० ) ॥

ननु वेदान्तजन्यब्रह्मज्ञानेनेव घटादिचाक्षुषादिज्ञानेनापि मूलाज्ञाननिवृत्तिर्भवेदेव, घटः सन्नित्यादिबुद्धिवृत्तेरपि तत्रावच्छेदकांशस्य कल्पितत्वेपि अकल्पितमूलाज्ञानविषयशुद्धचैतन्यविषयकत्वाविशेषादिति चेत्—

( १ ) अत्राहुराचार्यवाचस्पतिमिश्राः—"तं त्वौपनिषदं पुरुषं पृच्छामि" "वेदान्तविज्ञानसुनिश्चितार्थाः" "नावेदविन्मनुते तं बृहन्तं" इत्यादिश्रुतिभिर्ब्रह्मणो वेदान्तैकसमधिगम्यत्वश्रवणात्, "न सन्दृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम्" "पराञ्चि खानि व्यतृणत्स्वयम्भूस्तस्मात्पराङ्पश्यति नान्तरात्मन्" इत्यादिश्रुतिभिः प्रत्यक्षादिप्रमाणान्तरावेद्यत्वश्रवणाच्च न चक्षुरादीन्द्रियजन्यवृत्तिविषयत्वं ब्रह्मणः सम्भवति । किं च मूलाज्ञानतत्कार्यानुपहितकेवलनिष्प्रपञ्चशुद्धाद्वितीयचिन्मात्रविषयकत्वान्मूलाज्ञानस्य तादृशविषयकज्ञान-

१. स्वगोचरवृत्त्युप० ।

स्यैव मूलाज्ञाननिवर्तकत्वं सम्भवति । तदभावाच्च घटादिज्ञानानां न तन्निवर्तकत्वम् । ज्ञानाज्ञानयोर्निवर्त्यनिवर्तकभावे समानविषयकत्वस्यैव तन्त्रत्वादिति ॥

अथ वा—घटादिज्ञानानां चैतन्यं नैव विषयः, किं तु जडमेव; घटादिज्ञाननिवर्त्यावस्थाऽज्ञानानां जडमात्रविषयकत्वात् । जडे आवरणकृत्याभावत्वाज्ञानैकत्वादीनां मूलाज्ञानविषयत्वाच्चादोष इति ॥

( २ ) केचित्तु—ज्ञानाज्ञानयोश्चैतन्याश्रितत्वनियमेनाज्ञानमात्रस्य तमस इव स्वाश्रयादन्यत्रावरणहेतुत्वानुपपत्तेः घटाद्यवस्थाऽज्ञाननिवर्तकचाक्षुषादिज्ञानानां तत्तद्विषयावच्छिन्नचैतन्यमेव विषयः, न जडमात्रम् । न च तर्हि घटादिज्ञानानां ब्रह्मविषयकत्वान्मूलाज्ञाननिवर्तकत्वापत्तिरिति वाच्यम् । घटादिज्ञानानां चैतन्यविषयकत्वेप्यवच्छिन्नविषयकत्वात्, केवलनिष्प्रपञ्चाद्वितीयशुद्धचिन्मात्रगोचरवेदान्तैकप्रमाणजन्यत्वाभावेन श्रोतव्यविधिसिद्धश्रवणनियमादृष्टसहिताप्रतिबद्धब्रह्मज्ञानत्वाभावाच्चेति ॥

( ३ ) अन्ये तु—तत्त्वमस्यादिवेदान्तमहावाक्यजन्यजीवब्रह्माभेदविषयकज्ञानमेव तादृशमूलाज्ञाननिवर्तकम्, तस्यैव[1] जीवब्रह्माभेदावारकत्वात्, न तु चैतन्यमात्रविषयकघटादिज्ञानम् । तथा च घटादिज्ञानस्य महावाक्यजन्यज्ञानस्य च समानविषयकत्वेन चैतन्यांशे विषयतो विशेषाभावेपि कारणसामग्रीविशेषादेव घटादिज्ञानापेक्षया महावाक्यजन्याभेदज्ञानस्य वैलक्षण्यं बोध्यम् । अभेदज्ञानत्वं च न

---

१ मूलाज्ञानस्यैव ।

केवलमभेदमात्रविषयकज्ञानत्वम् । किं तु वाक्यजन्यज्ञानस्य स्वविषयचैतन्येन सह सामग्रीविशेषाधीनत्वप्रयुक्तस्वरूपसम्बन्धविशेषेण चैतन्यगोचरत्वं घटादिज्ञानव्यावृत्तमिति ॥

( ॥ ११ ॥ )

ननु—घटादिज्ञानवत् ब्रह्मज्ञानमपि स्वोपादानमूलाज्ञानबाधकं न भवति लोके कार्यस्य स्वोपादानस्थितिविरोधित्वादर्शनादिति चेत्—

( १ ) अत्राहुः केचित्—उपादानोपादेययोर्निवर्त्यनिवर्तकभावप्रयोजकविरोधाभावस्योत्सर्गतः क्वचिद्दृष्टत्वेपि अन्यत्र निवर्त्यनिवर्तकभावप्रयोजकत्वेन घटादिज्ञानाज्ञानयोः क्लृप्तस्य समानविषयकत्वस्य विशेषरूपतया, तस्य च ब्रह्माज्ञानतज्ज्ञानयोः सत्त्वात्, तेन च सामान्यरूपोपादानोपादेयभावप्रयुक्ताविरोधस्य बाधात्, कार्यकारणयोरपि वेणुतज्जवह्न्योः पटाग्निसंयोगयोर्निवर्त्यनिवर्तकभावस्य दृष्टत्वाच्च, अस्त्येव ब्रह्मज्ञानेन स्वोपादानमूलाज्ञानस्य बाध इति ॥

॥ ( १२ ) ॥

ननु—एवमपि सविलासमूलाज्ञाननिवर्तकचरमसाक्षात्कारस्य निवर्तकान्तराभावात्कथं निवृत्तिः? कथञ्चिन्निवर्तकान्तरकल्पनायामप्यनवस्थापातात्, स्वेनैव निवृत्त्ययोगात्, अनिवृत्तौ द्वैतापत्तेश्चेति चेत्—

( १ ) अत्राहुः केचित्—नैवात्र क्रमो विवक्षितः प्रथमं ब्रह्मज्ञानेन स्वेतरस्य सकलस्य नाशः पश्चात्स्वस्येति । किन्तर्हि । ब्रह्मज्ञान-

---

१ क्रमप्रतिपत्तिरूपकारणसामग्री । २. तादृग्विरोधस्य अथवा समानविषयकत्वस्य ।

स्यापि स्वेनैव ब्रह्मात्मन्यध्यस्तसविलासमूलाज्ञानेन सहैव नाशोऽभ्युपगम्यते । न हि स्वस्वेतरविनाशकत्वमेकस्य दृष्टमिति वाच्यम् । कतकरजसि पङ्किलजलस्थरजोनिवृत्त्या सहैव स्वनिवृत्तेरपि दृष्टत्वादिति ॥

( २ ) अन्ये तु—प्रतप्तायःपिण्डे निक्षिप्तं जलं यथा वह्निं विनाशयत्स्वयमपि तत्क्षणाद्विनश्यति, तथा ब्रह्मज्ञानमपि स्वेतरनिखिलं दृश्यं निवर्तयत्स्वयमपि नश्यतीति दृष्टान्तान्तरमुदाहरन्ति ॥

( ३ ) अपरे तु—यथा शुष्कतृणतूलादिपुञ्जनिक्षिप्तो वह्निस्तृणादिपुञ्जं नाशयित्वा स्वयमपि नश्यति, तथा सविलासमूलाज्ञानं निर्लेपं विनाशयदात्मज्ञानं स्वयमपि नश्यतीत्ययमेको दृष्टान्तः ॥ ननु—ब्रह्मज्ञानं करणान्तरमनपेक्ष्य स्वयमेव नश्यतीत्यनुपपन्नम्, घटादिनाशे प्रतियोग्यतिरिक्तमुद्गरपातादिकारणान्तरदर्शनादितिचेन्न-उभयथाप्युपपत्तेः। दग्धतृणकूटदहनवत् कारणान्तरमनपेक्ष्य, कालादृष्टेश्वरेच्छादीनां नाशपूर्वभावितया कारणभावमपेक्ष्य चेति ॥ न चैवं ज्ञानातिरिक्तकारणापेक्षायां ज्ञानैकनिवर्त्यत्वं मिथ्यात्वमिति मिथ्यालक्षणस्य हानिरिति वाच्यम् । ज्ञानाघटितसामग्र्यनिवर्त्यत्वे सति ज्ञाननिवर्त्यत्वस्य तदर्थत्वात् । "नान्यः पन्था विद्यतेऽयनाय" इत्यादिश्रुतेरपि ज्ञानमेकमेव मोक्षसाधनमिति तात्पर्यं न विवक्षितम्, किन्तु ज्ञानाघटितं किमपि साधनं न भवतीत्येवेति ॥

( ४ ) एके तु—यथा तमस्तमोन्तरं न निवर्तयति, एवं चरमसाक्षात्कारोऽपि जडत्वाविशेषात्सविलासमूलाज्ञानं न शक्नोति निवर्तयितुम्, किन्तु चैतन्यमेव प्रकाशरूपत्वाच्छक्नोति निवर्तयितुम् । तस्यापि

स्वरूपेणाज्ञानादिसाक्षितया साधकत्वेपि अखण्डाकारवृत्त्युपहिततया बाधकत्वसम्भवात् । यथा तृणादेः साधकमपि सवितृकिरणं सूर्यकान्तोपलारूढं सत् दाहकं भवति, यथा वा काष्ठाश्रिताग्निज्वालापि स्वाश्रयकाष्ठादेः, तद्वदिति ॥

( ५ ) इतरे तु—विरोधप्रयोजकस्य समानविषयकत्वादेर्ज्ञानाज्ञानयोरेव सत्वान्मूलाज्ञानस्यैव ब्रह्मज्ञानं साक्षान्निवर्तकम् । प्रपञ्चरूपतत्कार्यस्य तु स्वोपादानमूलाज्ञाननिवृत्तिद्वारा । अस्मिन्पक्षे साक्षात्परम्परया वा ज्ञानैकनिवर्त्यत्वं मिथ्यात्वमित्यङ्गीकारात् प्रपञ्चेपि तत्सिद्ध्यति । प्रपञ्चान्तर्गतब्रह्मविषयकचरमसाक्षात्कारस्यापि मूलाज्ञाननिवृत्त्यैव निवृत्तिः । तथा च विदुषो देहादिप्रपञ्चस्यापि साक्षाज्ज्ञानेन सह विरोधाभावात् प्रारब्धकर्मप्रतिबन्धेनाविद्यालेशानुवृत्त्या जीवन्मुक्तिशास्त्रस्याप्यवकाश एवं सत्येव भवतीत्याहुरिति शिवम् ॥

इति श्रीवासुदेवब्रह्मेन्द्रसरस्वतीविरचिते सिद्धान्तलेशतात्पर्यसङ्ग्रहे तृतीयपरिच्छेदः सम्पूर्णः ॥

---

ॐ

## ॥ अथ चतुर्थपरिच्छेदः ॥

॥ ( १ ) ॥

ननु निरवयवाया अप्यविद्यायाः कोयमविद्यालेशो नाम, यमाश्रित्य लोके जीवन्मुक्तिव्यवहार इति चेत्—

( १ ) अत्राहुः केचित्—आवरणविक्षेपशक्तिद्वयविशिष्टाया अविद्याया आत्मसाक्षात्कारेणावरणशक्तेर्नाशेपि, प्रारब्धकर्मरूपप्रतिबन्धनाशावधि अनुवृत्ता विक्षेपशक्तिरेव लेश इत्युपचर्यत इति ॥

( २ ) अन्ये तु—तत्त्वज्ञानेनाविद्यानाशेपि क्षालितलशुनभाण्डगन्धवदविद्याजन्या देहादिस्थितिहेतुर्वासनैव लेशशब्दार्थ इति ॥

( ३ ) अपरे तु—दग्धपटन्यायात् तत्त्वज्ञानेन नष्टार्थक्रियाकारिणी अविद्यैवाविद्यालेश इति ॥

( ४ ) सर्वज्ञात्मगुरवस्तु—प्रचण्डमार्ताण्डप्रभाविनष्टान्धकारवत् कृतनिदिध्यासनस्यानन्यचित्ततयाऽनवरतं ब्रह्मणि निष्प्रपञ्चे प्रत्यगात्मनि निष्ठस्य अप्रतिबद्धापरोक्षब्रह्मसाक्षात्कारोदयमात्रेण निःशेषं सविलाससवासनाद्यविद्यानिवृत्तेरविद्यालेशानुवृत्तिवार्तैवानुपपन्ना । "तस्य तावदेव चिरं" इत्यादिप्रारब्धकर्मानुवृत्त्या जीवन्मुक्तिप्रतिपादकशास्त्रं तु श्रवणादिविधिस्तावकार्थवादमात्रमिति ॥

॥ ( २ ) ॥

ननु तत्त्वसाक्षात्कारफलभूताविद्याध्वंसः किमधिष्ठानचिन्मात्ररूपः, उत तद्भिन्न इति सन्देहे—

( १ ) अत्राहुर्ब्रह्मसिद्धिकाराः—अधिष्ठानचैतन्यरूपैवाविद्यानिवृत्तिः। न च तर्हि नित्यसिद्धत्वात्तस्य ज्ञानसाध्यत्वासम्भवः। द्विविधं हि साध्यलक्षणम्, सादिपदार्थत्वावच्छिन्नसाधारणं जन्यत्वरूपमेकम्, अपरं तु साद्यनाद्युभयसाधारणम्। यस्मिन्सत्यग्रिमक्षणे यस्य सत्त्वं यद्व्यतिरेके चाभावः, तत् तत्साध्यमिति। अत्र च प्रथमलक्षणासम्भवात् द्वितीयमेव गृह्यते। तेन अविद्यानिवृत्तेश्चैतन्यसत्त्वरूपस्यात्मनो ज्ञानसाध्यत्वमुपपन्नम्। तथाहि प्रायश्चित्ते सत्यग्रिमक्षणे दुःखप्रागभावस्य सत्त्वम्, प्रायश्चित्ताभावे तु दुःखस्यैवोदयाद्दुःखप्रागभावाभाव इति, दुःखप्रागभावस्यानादेरपि प्रायश्चित्तसाध्यत्वं यथा, तथा यस्मिन्ब्रह्मज्ञाने सत्यग्रिमक्षणे आत्मरूपाविद्यानिवृत्तिसत्त्वम्—तद्व्यतिरेके तदभावः, भ्रान्तिसिद्धः कश्चिच्चैतन्यरूपाविद्यानिवृत्त्यभाव इति ॥

( २ ) आनन्दबोधाचार्यास्तु—अविद्यानिवृत्तिरात्मरूपा न भवति, किन्तु तद्भिन्नैव। तथापि सा न सती, द्वैतापत्तेः। ज्ञानवैयर्थ्यान्नाप्यसती। विरोधान्न सदसती च। नाप्यनिर्वाच्या। अनाद्यविद्यातिरिक्तसाद्यनिर्वाच्याविद्यानिवृत्त्यभ्युपगमे,[1] तस्या अज्ञानोपादानकत्वनियमेनानिर्मोक्षप्रसङ्गात्। वस्तुतस्तु—उक्तप्रकारचतुष्टयविलक्षणपञ्चमप्रकारेति ॥

( ३ ) अद्वैतविद्याचार्यास्तु—अविद्यानिवृत्तिरपि स्वकारणाविद्यावदनिर्वाच्यैव। न चोपादानाविद्यानुवृत्त्याऽनिर्मोक्षप्रसङ्ग इति वाच्यम्। तस्या निवृत्तेः क्षणिकभावविकारत्वोपगमेन स्वतो नाशात्।

---

१. सादि–अनिर्वाच्य०

यथा हि लोके घटादिपदार्थानामुत्पत्तिर्नाम षड्भावविकारेष्वाद्यक्षणमात्रसंसर्गी कश्चन भावरूपो विकार उपेयते, न त्वभावरूपः; तथा निवृत्तिरूपनाशोपि चरमसमयमात्रसंसर्गी कश्चिद्भावरूप एव विकार एष्टव्यः, न त्वभावरूपः। एवञ्चाविद्यानिवृत्तेरपि तत्त्वज्ञानोदयानन्तरचरमसमयमात्रवर्तिभावविकारत्वोपगमान्नानिर्वाच्यत्वेऽनिर्मोक्षप्रसङ्ग इति॥

॥ ( ३ ) ॥

ननु अविद्यानिवृत्तेः क्षणिकत्वे कथं मोक्षः स्थिरपुरुषार्थो भवेदिति चेत्—

( १ ) अत्राहुः केचित्—सुखस्य सुखसाधनस्य वा, दुःखाभावस्य दुःखाभावसाधनस्य वा पुरुषार्थत्वेन अखण्डानन्दस्वप्रकाशसत्स्वरूपावारकसंसारदुःखहेत्वविद्यानिवृत्तेः सुखेतरत्वात् दुःखाभावेतरत्वाच्च साक्षादपुरुषार्थत्वेपि ज्ञानसाध्यत्वेन पुरुषार्थसाधनतया पुरुषार्थत्वमुपचर्यते। अविद्योच्छेदानन्तरमेवाखण्डानन्दस्फुरणस्य संसारदुःखोच्छेदस्य च दर्शनादिति॥

( २ ) चित्सुखाचार्यास्तु—निरतिशयस्वरूपसुखमेव स्वतः पुरुषार्थः, नाविद्यानिवृत्तिवद्दुःखाभावः। तस्य केवलात्मसुखानुभवकाले दुःखस्य प्रतिबन्धकत्वेन तदभावविधया परम्परया पुरुषार्थत्वात्। किंच सुखदुःखाभावयोः प्रवृत्तिमात्रम्प्रत्यनुगतकारणे इष्टसाधनताज्ञाने इष्टांशे सुखत्वजातेः प्रवेशकल्पने कारणतावच्छेदकलाघवात्, इच्छाविषयत्वरूपोपाधेः प्रवेशकल्पने तु कारणतावच्छेदकगौरवाच्च। न च दुःखाभावरूपपुरुषार्थशेषतया सुखस्यैव काम्यत्वं वैपरीत्येन किन्न

स्यादिति वाच्यम् । लोके हि क्षणिकग्राम्यसुखमुद्दिश्य दीर्घकालदुःखानुभवस्य क्लेशार्जितबह्वर्थादिव्ययस्य च दर्शनादित्याहुः ॥

॥ ( ४ ) ॥

ननु निरतिशयब्रह्मानन्दस्यैव मुक्तिरूपत्वेन तस्य च वेदान्तमहावाक्यैः प्रत्यगात्मस्वरूपतया प्रतिपादनात् कथं नित्यप्राप्तेप्यानन्दे तदर्थं साधनानुष्ठानप्रवृत्तिरिति चेत्—

( १ ) अत्राहुः केचित्—नित्यप्राप्तेऽप्यर्थेऽप्राप्तत्वभ्रान्त्या तत्प्राप्त्यर्थं तदुचितोपायेषु प्रवृत्तेर्लोके दृष्टत्वात् । यथा स्वकण्ठगतमेव कनकाभरणं [1]भ्रान्त्याऽप्राप्तमपि परोपदेशेन प्राप्तमिव भवति, तद्वत्स्वरूपानन्दोप्यविद्ययाऽप्राप्तः सन्नकृतार्थतामजनयत् । प्राचीनसुकृतवशाद्गुरुवेदान्तमहावाक्यैरुदितायां विद्यायां निवर्तितायामविद्यायां निवर्तिते च निखिलानर्थविक्षेपे प्राप्तः सन् कृतकृत्यतां जनयति । तत्प्राप्तिश्चौपचारिक्येवेति ॥

( २ ) अन्ये तु—आनन्दो मयि नास्ति न प्रकाशत इति लोकव्यवहारसिद्धोऽविद्यास्थितिकः काल्पनिकः कश्चिद्ब्रह्मानन्दस्याभावोऽङ्गीकर्तव्यः; अविद्यानिवृतौ च तन्मूलकानन्दाभावोपि निवर्तत इति 'यस्मिन्सत्यग्निमक्षण' इति [2]न्यायेन मुख्यमेव तत्प्राप्यत्वमिति ॥

( ३ ) अपरे तु—सत्तामात्रेण नाखण्डब्रह्मसुखं पुरुषार्थः, अवे-

---

१. भ्रान्त्याऽप्राप्तमिव परोपदेशेन प्राप्तमिव च भवति—इति पाठान्तरं ।
२ ज्ञाते सति अग्निमक्षणे निरतिशयानंदसत्त्वं, ज्ञानाभावे च साधितस्य निरतिशयानन्दाभावस्यैव सत्त्वमिति ।

द्यत्वात् । किन्त्वपरोक्षब्रह्मविज्ञानेनाविद्यानिवृत्तौ सत्यामेव प्राप्यस्य अनावृतचैतन्याभिन्नाखण्डस्वरूपानन्दस्यैव पुरुषार्थत्वमिति ॥

( ४ ) इतरे तु—यथा वस्तुतोऽभेदेपि जीवानामाविद्यकभेदान्नान्योन्यसुखाद्यापरोक्ष्यं, एवं चिदानन्दयोः सत्वेपि वास्तवाभेदे काल्पनिकभेदान्नानन्दापरोक्ष्यम् । ज्ञानेन भेदप्रविलये त्वपरोक्षत्वप्रयोजककेवलचैतन्याभेदसत्वादानन्दावाप्तिः । तदापरोक्ष्यमेव तस्य विद्यासाध्यत्वमिति ॥

॥ ( ५ ) ॥

ननु मुक्तिदशायां विद्याविध्वंसिताविद्याद्यखिलोपाधिकस्य जीवस्य किमीश्वररूपेणावस्थानम्, उत निर्विशेषशुद्धचिन्मात्रात्मनावस्थितिर्भवतीति विवित्सायाम्—

( १ ) अत्राहु केचित्—एकजीववादे जीवस्यैकत्वात् तदीयमूलाज्ञानरूपोपाधेरप्येकत्वेन यदा अद्वितीयशुद्धचिन्मात्रस्वतत्वसाक्षात्कारोदयः, तदानीमेव देवतिर्यङ्मनुष्यादिभूतभौतिकनिखिलदृश्यप्रपञ्चोपादानाज्ञानस्य निःशेषं प्रविलयाच्छुद्धनिर्विशेषचैतन्यात्मनाऽवस्थानं सिध्यति । शुकादिमुक्तिप्रतिपादकशास्त्रे[1] तु स्वार्थेऽप्रामाण्याच्छ्रवणादिविध्यर्थवाद इति । अयं च पक्षोऽत्यन्तोत्तमाधिकारिण एव परममुक्तिसाधनत्वेन रोचेतेति ॥

( २ ) अपरे तु—अनेकजीववादे मायाप्रतिबिम्ब ईश्वरः अविद्याप्रतिबिम्बा जीवा इत्यस्मिन्पक्षे, एकस्य जीवस्य तत्त्वज्ञानेन स्वा-

---

१. ०शास्त्रं तु० इति पाठान्तरं ।

विद्यातत्कार्यप्रपञ्चप्रविलयाद्बिम्बभूतशुद्धचैतन्यात्मना मुक्ताववस्थित-स्यापि यावत्सर्वमुक्तिर्भविष्यति तावद्बद्धजीवान्तराविद्याकृतबिम्बत्व-जीवेश्वरविभागादिप्रपञ्चोऽनुवर्तत एवेति ॥

( ३ ) इतरे तु—अनेकजीववाद एव मायायां अविद्यायां अन्तः-करणे वा चित्प्रतिबिम्बो जीवः, बिम्बस्थानीय ईश्वरः, तदुभयानुगतं शुद्धचैतन्यमित्यस्मिन्पक्षे तु, एकस्य जीवस्य ज्ञानोदयेपि जीवेश्वर-विभागाद्यस्पृष्टनिर्विशेषब्रह्मभावरूपमुक्तिर्न सिध्यति । किं तु, याव-त्सर्वमुक्ति सर्वज्ञत्वसर्वकर्तृत्वसर्वेश्वरत्वसर्वकामत्वादिगुणकबिम्बभूतप-रमेश्वरभावापत्तिरेवेष्यते । न च मुक्तस्य ईश्वरत्वप्रयोजकाविद्यायाः ज्ञा-नेन दग्धत्वात्कथमीश्वरभावापत्तिरिति शङ्क्यम् । स्वाविद्याभावेऽपि बहुजीवान्तराविद्यायाः तदानीमनपायात् ॥ ननु सगुणोपासनयापि "यथाक्रतुरस्मिंल्लोके पुरुषो भवति तथेतः प्रेत्य भवति" "तं यथा यथोपासते तथैव भवति" इत्यादि श्रुतिषु ईश्वरभावापत्तिश्रवणात् सगुणनिर्गुणविद्याजन्यमुक्त्योः को भेद इति चेत्—अत्रोच्यते—सगु-णोपासकानामखण्डतत्त्वसाक्षात्काराभावात् न अविद्यातत्कार्याहङ्कारादि-नाशः । आवरणानपायात् न अखण्डस्वस्वरूपानन्दाभिव्यक्तिश्च । किन्तु तेषां सङ्कल्पमात्रात् परमेश्वरेण तुल्यस्वभोगोपयोग्यदिव्यदेहेन्द्रियव-नितादिसृष्टिसामर्थ्ये सत्यपि स्वातन्त्र्येण निखिलजगदुत्पत्तिप्रलयादि-सामर्थ्यं नास्त्येव । ते च सगुणब्रह्मलोकं गत्वा तत्रकृतश्रवणादिज-न्यनिर्गुणब्रह्मसाक्षात्कारेण सम्पन्नाः सन्तः सगुणब्रह्मणैव सह क्रमेण मुच्यन्ते । वेदान्तश्रवणादिजन्याखण्डब्रह्मसाक्षात्कारेण सद्योमुक्तानां

तु निःसन्धिबन्धमीश्वरभावं प्राप्तानां यावत्सर्वमुक्ति जगत्सृष्ट्यादिसामर्थ्यं, सर्वमुक्तौ बिम्बभावनिवृत्त्या निर्विशेषब्रह्मात्मनावस्थितिश्चेति विशेष इति शिवम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीकृष्णानन्देन्द्रसरस्वतीचरण-
कमलचञ्चरीकायमाणश्रीवासुदेवब्रह्मेन्द्रसरस्वतीविरचिते
शास्त्रसिद्धान्तलेशतात्पर्यसङ्ग्रहे
चतुर्थपरिच्छेदः सम्पूर्णः ॥

॥ सम्पूर्णश्चायं ग्रन्थः ॥

---